श्रीः ।

# लघुकौमुदीस्थप्रकरणानुक्रमः ।



इति प्रकरणानुक्रमणिका समाप्ता ।

॥ श्रीः ॥

# अथ लघुकौमुदी प्रारभ्यते ।

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

## अथ संज्ञाप्रकरणम् ।

अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४ ॥ इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्संज्ञकः ॥ हलन्त्यम् । १ । ३ । ३ । उपदेशेऽन्त्यं हलि

---

१ व्याकरणशास्त्रात् ( तात्पर्यं संगृह्योति शेषः ) ॥ २ प्रशस्ताः शब्दव्युत्पत्तिज्ञानादिगुणा यस्यास्ताम् ॥ ३ पणनं पणः पणोऽस्यास्ति इति पणी पणिनः गोत्रापत्यं पाणिनिः पाणिनिना प्रोक्तं पाणिनीयं तस्मिन् प्रवेशाय ( पाणिन्युक्तव्याकरणशास्त्रे सुखेन बुद्ध्यनुसरणाय ) ॥ ४ लघ्वी चासौ सिद्धान्तानां कौमुदीव चंद्रिकेव. कौमुदी चेति ताम् । ( ग्रन्थसंख्यया यद्यपि स्वल्पा तथाऽपि बहुशब्दसिद्धान्तप्रकाशिकेत्यर्थः ) ॥ ५ महेश्वरादागतानि माहेश्वराणि । नृत्यावसाने नटराजराजो ननाद ढक्कां नवपंचवारम् । उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ ६ अण् आदिर्येषां ताः अणादयः । अणादयश्च ताः संज्ञाश्च ताभ्यः इमानि अणादिसंज्ञार्थानि । अर्थेन नित्यसमासो विशेष्यलिङ्गता च । अत्र च ' अइउण् ' इत्यत्र अकारमारभ्य णकारपर्यन्तानां वर्णानां यः संक्षेपेण संग्रहः सोऽणशब्देन गृह्यते ( अण् प्रत्याहारस्यार्थः ) । एवमग्रेऽपि ज्ञेयम् । अत्रादिशब्देन ' इण् ' ' अक् ' इत्यादयः प्रत्याहारा गृहीतव्याः । ( इण प्रत्याहारस्तु लण्सूत्रस्थणकारेण सहैव ग्राह्यः ) । अर्थः प्रयोजनम् ॥ ७ एषां सूत्राणां अन्ते भवा अन्त्याः ' ण् क् ङ् ' इत्यादयो वर्णाः ॥ ८ इत्संज्ञः । ' हयवरट् ' इत्यादिषु सूत्रेषु ॥

त्स्यात् उपदेश[1] आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरा[2]दनुवर्तनीयं[3] सर्वत्र[4]
अदर्शनं लोपः । १ । १ । ६० । प्रसक्त[5]स्यादर्शनं लोपसंज्ञं स्यात् ॥ तस्य लोपः । १ । ३ । ९ । तस्येतो लोपः स्यात् । णादयो[6]ऽणाद्यर्थाः[7] ॥ आदिरन्त्येन सहेता । १ । १ । ७१ । अन्त्ये[8]नेता[9] सहित आदिर्मध्य[10]गानां स्वस्य[11] च संज्ञा स्यात् । यथा—अणिति अइउवर्णानां संज्ञा । एवं अच्[12] हल्[13] अलि[14]त्यादयः ॥ ऊकालोऽज्झ्रस्वदीर्घप्लुतः । १ । २ । २७ उश्च ऊश्च ऊ३श्च वः । वां[15] काल[16] इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स[18] प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ उच्चैरुदात्तः । १ । २ । २९ । नीचैरनुदात्तः । १ । २ । ३० । समाहारः[21] स्वरितः । १ । २ । ३१ । स[22] नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ मुखनासिकावचनोऽनुनासिकः । १ । १ । ८ । मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अइउऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश । तस्य दीर्घाभावात् एचामपि[23]

---

१ आद्यानां शंकरपाणिन्यादीनामुच्चारणं ( तैः कृतं डमरुमुखादिद्वारेत्यर्थः ) २ सूत्रक्रमेण पूर्वोक्तादन्यस्मात् सूत्रात् ॥ ३ अनुवृत्तिं कृत्वा ग्राह्यम् ॥ ४ विद्यमान... त्यर्थः ॥ ५ इत्संज्ञकस्य ॥ ६ 'अइउण्' 'ऋलृक्' इत्यादिसूत्रेषूक्ताः 'ण् क्' ...दयः ॥ ७ 'अण् अक्' इत्यादिप्रत्याहारा अर्थाः प्रयोजनं एषां ते ॥ ८ अन्त्ये 'ण् क्' इत्यादिना ॥ ९ इत्संज्ञकेन ॥ १० 'इ उ' इत्यादीनाम् ॥ ११ आकार... १२ अकारमारभ्य चकारान्तो वर्णसंग्रहरूपः प्रत्याहारोऽच्संज्ञकः । एवमग्रे... ज्ञेयम् ॥ १३ हकारादिलकारान्तम् ॥ १४ अकारादिलकारान्तम् ॥ १५ पूर्वो... ह्रस्वदीर्घप्लुतानां त्रयाणामुकाराणाम् ॥ १६ उच्चारणकाल इव ॥ १७ उच्चारणका... १८ ह्रस्वदीर्घप्लुताभिधः अच् ॥ १९ ताल्वादिषु अग्रे वक्ष्यमाणेषु स्थानेषूर्ध्वभागे... त्पन्नः ॥ २० ताल्वादिषु स्थानेष्वधोभागे उत्पन्नः ॥ २१ उदात्तानुदात्तत्वरूपवर्णधर्मौ... संक्षिप्येते यस्मिन् सः ॥ २२ ह्रस्वादिभेदत उदात्तादिभेदतश्चोक्तः ॥ २३ एच्प्रत्या... हारस्थितानां 'ए ओ ऐ औ' एषां वर्णानामित्यर्थः ॥

[अष्टा]दश । तेषां ह्रस्वाभावात् ॥ तुल्यास्यप्रयत्नं सवर्णम् । १ । १ । ९
ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । ( ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् ) अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ॥ बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादोऽघोषो घोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तस्थाः । शल ऊष्माणः । [illegible]ः । ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गस-

---

१ वर्णस्य ॥ २ वर्णेन ॥ ३ अन्योन्यम् ॥ ४ कुशब्देन 'क ख ग घ ङ' इति वर्णपंचकं ग्राह्यम् ॥ ५ विसर्गसंज्ञकस्य ॥ ६ च छ ज झ ञाः ॥ ७ ट ठ ड ढ णाः ॥ ८ त थ द ध नाः ॥ ९ प फ ब भ माः ॥ १० ≍प ≍फ इत्यादौ पकारफकारयोः प्रागर्धविसर्गसमानः ॥ ११ ककारखकारयोः पूर्वमर्धविसर्गसदृश इत्यग्रे वक्ष्यमाणस्य ॥ १२ प्रयत्नः ॥ १३ यस्योच्चारणकाले जिह्वाग्रादीनां कण्ठाद्यवयवेषु स्पर्शः पूर्णतया भवति स स्पृष्टप्रयत्नः ॥ १४ अत्यल्पे स्पर्शे तु ईषत्स्पृष्टप्रयत्नः ॥ १५ उच्चारणकालेऽवयवानामत्यल्पविवरणे ईषद्विवृतः ॥ १६ पूर्णतया विवरणे तु विवृतः ॥ १७ अवयवानामाकुञ्चनाद्धेतोः संवृतः ॥ १८ कादयो मावसाना इत्यग्रे स्पर्शा वक्ष्यन्ते ॥ १९ वाक्ययोजनायाम् ॥ २० व्याकरणरीत्या शब्दसिद्धिपर्यन्तम् ॥ २१ वर्णोत्पत्तेः बहिरुत्पन्नः ॥ २२ खर् प्रत्याहारः ॥ २३ विवारप्रयत्नवन्तः ॥ २४ यण् प्रत्याहारः ॥ २५ शल् प्रत्याहारः ॥ २६ लोकप्रसिद्धपाठानुरोधेनेदम् ॥ २७ अच् प्रत्याहारः ॥

दृशो जिह्वामूलीयः । ≍प≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्म नीयः । अंअः इत्यचः परावनुस्वारविसर्गौ ॥ अणुदित्सवर्णस्य चाप्र त्ययः । १ । १ । ६९ । प्रतीयते विधीयत इति प्रत्ययः । अविधीयम नोऽणुदिच्च सवर्णसंज्ञः स्यात् । अत्रैवाण् परेण णकारेण । कुचुटुतुपु ए उदितः । तदेवम् । अ इत्यष्टादशानां संज्ञा तथेकारोकारौ । ऋकारस्त्रिंशतः एवं लृकारोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन य द्विधा । तेनानुनासिकाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥ परः सन्नि संहिता । १ । ४ । १०९ । वर्णानामतिशयितः सन्निधिः संहित स्यात् ॥ हलोऽनन्तराः संयोगः । १ । १ । ७ । अज्भिरव्यवहिता संयोगसंज्ञाः स्युः ॥ सुप्तिङन्तं पदम् । १ । ४ । १४ । सुबन्तं ति च पदसंज्ञं स्यात् ॥ इति संज्ञाप्रकरणम् ॥

## अथाच्संधिप्रकरणम् ।

इको यणचि । ६ । १ । [illegible] स्थाने यण् स्यादचि सं विषये [illegible] इति स्थिते ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य १ । ६६ । सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य बोध्यम् ॥ स्थानेऽन्तरतमः । १।१।५० । प्रसंगे सति सदृशतम स्यात् । सुध् य् उपास्य इति जाते ॥ अनचि च । ८ । ४ । ४७ ।

---

१ अण् प्रत्याहारः पूर्वेण णकारेण तथा इण् प्रत्याहारः परेण णकारेण स इति नियमस्तथापि अणुदित्सवर्णस्येति सूत्रे अण् प्रत्याहारः परेणैव णका ॥ २ यवलवर्णाः ॥ ३ स्वरसंज्ञकैः वर्णैः ॥ ४ व्यवधानेन रहिताः ॥ ५ हल्म स्थितवर्णाः ॥ ६ अग्रे वक्ष्यमाणाः सु औ जस् इत्यादि विभक्तिप्रत्ययाः सुपू तेऽन्ते यस्य तत्सुबन्तं ॥ ७ तिप् तस् झि इत्यादयः प्रत्याहार प्रत्ययास्तिङ्संज्ञास्तेऽन्ते यस्य तत्तिङन्तम् ॥ ८ अन्येन वर्णेन तस्य ॥ १० एकवर्णस्य स्थानेऽनेकादेशप्राप्तौ सत्याम् ॥

धरस्य यरो' द्वे वा स्तो न त्वचि ॥ झलां जश् झशि । ८ । ४ । ५३ स्पष्टम् । इति घकारस्य दकारः ॥ संयोगान्तस्य लोपः । ८ । २ । २३ संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् ॥ अलोऽन्त्यस्य । १ । १।५२ षष्ठीनिर्दिष्टोऽन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते ( यणः प्रति... वाच्यः ) सुद्ध्युपास्यः, मध्वरिः, धात्रंशः, लाकृतिः ॥ एचोऽयवायावः । ६ । १ । ७८ । एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ यथासंख्यमनुदेशः समानाम् । १ । ३ । १० । समसंबन्धी विधिर्यथा... स्यात् । हरये, विष्णवे, नायकः, पावकः ॥ वान्तो यि प्रत्यये । ६ । १ । ७९ । यकारादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम्, नाव्यम् ( अध्व परिमाणे च ) गव्यूतिः ॥ अदेङ् गुणः १ । १ । २ । अदेङ् च गुणसंज्ञः स्यात् ॥ तपरस्तत्कालस्य ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् ॥ आद्गुणः ।६।१।८७। अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः, गङ्गोदकम् ॥ उपदेशेऽजनुनासिक इत् ।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥ उरण् रपरः।१।१।५१। ऋ इति त्रिंशतः संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः, तवल्कारः ॥ लोपः शाकल्य-

---

१ यर् प्रत्याहारः ॥ २ अनेकव्यञ्जनानां समुदायः संयोगस्तदन्तम् ॥ ३ षष्ठीविभक्तिप्रत्ययेन निर्दिष्टः ॥ ४ एते आदेशाः ॥ ५ उक्तसंख्याक्रमेण ॥ ६ ओकारौकारयोः ॥ ७ अध्वनः परिमाणे मार्गप्रमाणे ॥ ८ क्रोशद्वयं 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः ॥ ९ 'अ ए ओ' एते वर्णा इत्यर्थः ॥ १० वर्ण इत्यर्थः ॥ ११ उच्चारणकालसदृशकालस्य न तु दीर्घप्लुतादिसवर्णस्य ग्राहकः ॥ १२ पूर्वपरयोर्वर्णयोः स्थाने ॥ १३ येषां वर्णानामित्संज्ञा कार्यानुसारतो दृश्यते ते एवात्रानुनासिका इति गुरुपरंपरया ज्ञानेन कृतनिश्चया इत्यर्थः ॥

त्य ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाशि परे ॥ पूर्वत्रासिद्धम् ।८।२।१। सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह, हरयिह, विष्ण इह, विष्णविह ॥ वृद्धिरादैच् १।१।१। आदैच्च वृद्धिसंज्ञः स्यात् ॥ वृद्धिरेचि ।६।१।८८। आदेचि वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम्, गङ्गौघः, देवैश्वर्यं कृष्णौत्कण्ठ्यम् ॥ एत्येधत्यूठ्सु । ६ । १ । ८९ । अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति, उपैधते, प्रष्ठौहः एजाद्योः किम् । उपेतः । मा भवान्प्रेदिधत् । (अक्षादूहिन्यामुपसंख्यानम्) अक्षौहिणी सेना । (प्रादूहोढोढ्येषैष्येषु) प्रौहः, प्रौढः, प्रौढिः प्रैषः, प्रैष्यः । (ऋते च तृतीयासमासे) सुखेन ऋतः सुखार्तः । तृतीये किम् । परमर्तः । (प्रवत्सतरकम्बलवसनार्णदशानामृणे) प्रार्णम्, वत्सतरार्णमित्यादि ॥ उपसर्गाः क्रियायोगे ।१।४।५९। प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप । एते प्रादयः ॥ भूवादयो धातवः ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ उपसर्गादृति धातौ ।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ ...

---

१ त्रयः पादा यस्याः सा त्रिपादी (सूत्रपाठेऽष्टमाध्यायस्य प्रथमं पादं परित्यज्य अन्तिमास्त्रयः पादा इत्यर्थः) ॥ २ प्रतिसूत्रमिति शेषः॥ ३ तस्य प्राप्तावपि तत्पूर्वदृष्ट्या तत्र दृश्यते (पूर्वसूत्रेण कृतेऽपि कार्ये अस्य सूत्रस्य कार्यं कार्यमेव इत्यर्थः ४ 'आ ऐ औ' इत्येते वर्णाः ॥ ५ 'इण् गतौ' 'एध वृद्धौ' इत्येतयोः ६ 'वाह ऊठ्' इत्युक्ते ॥ ७ अक्षाणामूहिनीति विग्रहे वार्तिकेन वृद्धिः। अक्ष... ऽस्या अस्तीति विग्रहे तु गुण एव तत्र अक्षोहिणीत्येव रूपम् । अर्थवद्ग्रहणेनानर्थकस्य ग्रहणमित्युक्तत्वादत्रार्थवदूहिनीशब्दपरत्वाभावात् ॥ ८ ऊहः ऊढः ऊढिः एष्यश्च तेषु ॥ ९ परमश्चासावृतश्चेति विग्रहस्वरूपम् ॥ १० अत्र ऋणशब्द एव ग्रा... न त्वर्णशब्दः ॥ ११ भू सत्तायामित्यादयः ॥

रे वृद्धिरेकादेशः स्यात् । प्रार्छति ॥ एङि पररूपम् ।६।१।९४। आद्
उपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते, उपोषति ।
अचोऽन्त्यादि टि ।१।१।६४। अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टि
संज्ञं स्यात् ( शकन्ध्वादिषु पररूपं वाच्यम् ) तच्च टेः । शकन्धुः, कर्कन्धुः
मनीषा । आकृतिगणोऽयम् । मार्तण्डः ॥ ओमाङोश्च ।६।१।९५। ओमि
आङि च परे पररूपमेकादेशः स्यात् । शिवायोन्नमः, शिव एहि, शिवेहि ॥
अकः सवर्णे दीर्घः । ६ । १ । १०१ । अकः सवर्णेऽचि परे पूर्वपरयो-
र्दीर्घ एकादेशः स्यात् । दैत्यारिः, श्रीशः, विष्णूदयः, होतॄकारः ॥
एङः पदान्तादति । ६ । १ । १०९ । पदान्तादेङोऽति परे पूर्वरूपमे
कादेशः स्यात् । हरेऽव, विष्णोऽव ॥ सर्वत्र विभाषा गोः । ६ । १ ।
१२२ । लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गोअग्रम्,
गोऽग्रम् । एङन्तस्य किम् । चित्रग्वग्रम् । पदान्ते किम् । गोः ॥ अनेका-
ल्शित्सर्वस्य ।१।१।५५। इति प्राप्ते ॥ ङिच्च । १।१।५३। ङिदनेकाल्
अन्त्यस्यैव स्यात् ॥ अवङ् स्फोटायनस्य ।६।१।१२३ । पदान्त
एङन्तस्य गोरवङ् वाऽचि । गोऽग्रम्, गवाग्रम् । पदान्ते किम् । गवि ।
इन्द्रे च । ६ ।१।१२४। गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥ दूराद्धूते च ।
८ । २ । ८४ । दूरात्संबोधने वाक्यस्य टेः प्लुतो वा ॥ प्लुतप्रगृह्या अचि
नित्यम् ।६।१।१२५ । एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र
गौश्चरति ॥ ईदूदेद्द्विवचनं प्रगृह्यम् । १ । १ । ११ । ईदूदेदन्तं द्विवचनं

---

१ अवर्णान्तात् ॥ २ संहिताकालेऽप्यसन्धिरूपत्वेनावस्थितिः ॥ ३ अनेका बहवः अलो वर्णा यस्य सोऽनेकाल् ॥ ४ शः शकारः इत्संज्ञको यस्य स शित् ॥ ५ ङकारः इत्संज्ञको यस्य स ङित् ॥ ६ प्लुतसंज्ञकाः ॥ ७ प्रगृह्यसंज्ञकाः ॥ ८ संधिकार्यं तत्र न भवतीति भावः ॥ ९ दूराद्धूते चेत्यनेन सूत्रेणात्र प्लुतसंज्ञा ॥

प्रगृह्यं स्यात् । हरी एतौ, विष्णू इमौ, गङ्गे अमू ॥ अदसो मात् । १।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः, अमू आसाते । मात्किम् । अमुकेऽत्र ॥ चादयोऽसत्त्वे । १।४।५७। अद्रव्यार्थाश्चादयो निपाताः स्युः ॥ प्रादयः । १।४।५८। एतेऽपि तथा ॥ निपात एकाजनाङ् । १।१।१४। एकोऽज्निपात आङ्वर्ज्यः प्रगृह्यः स्यात् । इ इन्द्रः, उ उमेशः । वाक्यस्मरणयोरङित् । आ एवं नु मन्यसे, आ एवं किल तत् । अन्यत्र ङित् । ईषदुष्णम् ओष्णम् ॥ ओत् । १।१।१५। ओदन्तो निपातः प्रगृह्यः । अहो ईशाः ॥ संबुद्धौ शाकल्यस्येतावनार्षे । १।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति, विष्णविति ॥ मय उञो वो वा । ८।३।३३। मयः परस्य उञो वो वाऽचि । किम्वुक्तम्, किमुउक्तम् ॥ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । ६ । १ । १२७ । पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसंधिः । चक्रि अत्र चक्र्यत्र । पदान्ता इति किम् ॥ अचो रहाभ्यां द्वे । ८ । ४ । ४६ । अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ । (न समासे) वाप्यश्वः ॥ ऋत्यकः । ६ । १ । १२८ ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्मऋषि, ब्रह्मर्षिः । पदान्ताः किम् । आर्च्छत् ॥ इत्यच्संधिः ॥

## अथ हल्संधिप्रकरणम् ।

स्तोः श्चुना श्चुः । ८ । ४ । ४० । सकारतवर्गयोः शकारचवर्गाभ्य

---

१ असति मादग्रहणे एकारोऽप्यत्रानुवर्तते ॥ २ इ इति वितर्के ॥ ३ उ इत्याश्चर्ये ॥ ४ ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् । ५ मयः मयूप्रत्याहारस्य ॥ ६ अत्र स्थान्यादेशयोर्यथासंख्यं । निमित्तकार्यिणोस्तु न तथा । तथाकृते तु शकारयोगे शकारः चवर्गयोगे चवर्ग इत्यर्थे संपन्ने शादिति निषेधस्तु व्यर्थः स्यादित्यर्थः ॥

योगे शकारचवर्गौ स्तः । रामश्शेते, रामश्चिनोति, सच्चित्, शार्ङ्गिञ्जय ॥ शात् । ८ । ४ । ४४ । शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः, प्रश्नः ॥ ष्टुना ष्टुः । ८ । ४ । ४१ । स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः, रामष्टीकते, पेष्टा, तट्टीका, चक्रिण्ढौकसे ॥ न पदान्ताट्टोरनाम् । ८ । ४ । ४२ । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट्सन्तः, षट्ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् । ( अनाम्नवतिनगरीणामिति वाच्यम् ) षण्णाम्, षण्णवतिः, षण्णगर्यः । तोः षि । ८ । ४ । ४३ । न ष्टुत्वम् । सन्षष्ठः ॥ झलां जशोऽन्ते । ८ । २ । ३९ । पदान्ते झलां जशः स्युः । वागीशः ॥ यरोऽनुनासिकेऽनुनासिको वा । ८ । ४ । ४५ । यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद्मुरारिः । ( प्रत्यये भाषायां नित्यम् ) तन्मात्रम्, चिन्मयम् ॥ तोर्लि । ८ । ४ । ६० । तवर्गस्य लकारे परे परसवर्णः । तल्लयः, विद्वाँल्लिखति । नस्यानुनासिको लः ॥ उदः स्थास्तम्भोः पूर्वस्य । ८ । ४ । ६१ । उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥ तस्मादित्युत्तरस्य । १ । १ । ६७ । पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ आदेः परस्य । १ । १ । ५४ । परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ॥ झरो झरि सवर्णे । ८ । ४ । ६५ । हलः परस्य झरो वा लोपः सवर्णे झरि ॥ खरि च । ८ । ४ । ५५ । खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम्, उत्तम्भनम् ॥ झयो होऽन्यतरस्याम् । ८ । ४ । ६२ । झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो

१ तोः तवर्गस्य षि षकारे परे ॥ २ यरः यर्प्रत्याहारस्थितवर्णस्य ॥ ३ पदान्तस्येति यरो विशेषणात् विप्र इत्यत्रानुनासिकाभावः ॥ ४ झर् प्रत्याहारः ॥ ५ नादघोषसंवारमहाप्राणप्रयत्नवतो हकारस्य ॥ ६ नादघोषसंवारमहाप्राणप्रयत्नवान् ॥

तुर्थः । वाग्घरिः ॥ शश्छोऽटि ।८।४।६३। झयः परस्य शस्य छो वाऽन्यः । तद्शिव इत्यत्र दस्य चुत्वेन जकारे कृते । खरि चेति जकारस्य चकारः । तच्शिवः, तच्छिवः ( छत्वममीति वाच्यम् ) तच्छ्लोकेन ॥ मोऽनुस्वारः ।८।३।२३। मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ॥ नश्चापदान्तस्य झलि ।८।३।२४। नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि, आक्रंस्यते । झलि किम् । मन्यते ॥ अनुस्वारस्य ययि परसवर्णः ।८।४।५८। स्पष्टम् । शान्तः ॥ वा पदान्तस्य ।८।४।५९। त्वङ्करोषि, त्वं करोषि ॥ मो राजि समः क्वौ ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥ हे मपरे वा ।८।३।२६। मपरे हकारे परे मस्य मो वा । किम्ह्मलयति, किंह्मलयति । ( यवलपरे यवला वा ) कियँह्यः, किंह्यः, किवँह्वलयति, किंह्वलयति, किलँह्लादयति, किंह्लादयति ॥ नपरे नः ।८।३।२७। नपरे हकारे मस्य नो वा । किन्ह्नुते, किंह्नुते ॥ ङ्णोः कुक्टुक् शरि ।८।३।२८। वा स्तः । प्राङ्क्षष्ठः, प्राङ्ख्षष्ठः, प्राङ्षष्ठः । ( चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् ) सुगण्ट्षष्ठः, सुगण्ठ्षष्ठः, सुगण्षष्ठः ॥ डः सि धुट् ।८।३।२९। डात्परस्य सस्य धुड्वा ॥ आद्यन्तौ टकितौ । १।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः, षट्सन्तः ॥ नश्च ।८।३।३०। नान्तात्परस्य सस्य धुड्वा । सन्त्सः, सन् सः ॥ शि तुक् ।८।३।३१। पदान्तस्य नस्य शे परे तुग्वा । सञ्छंभुः , सञ्च्छंभुः, सञ्च्शंभुः, सञ्शंभुः ॥ ङमो ह्रस्वादचि

१ मकार । २ 'छत्वममीति' ... 'ञ्जि च पदे' इत्यस्मात्सूत्रात्पद इति 'हलि सर्वेषाम्' इत्यस्माच्च सूत्रात् हलीति ॥ ३ पदान्तस्यानुस्वारस्य ययि प्रत्याहारान्तःपातिनि वर्णे परे परसवर्णो वा स्यात् ... ४ ङकारणकारयोः कुक्टुकागमौ वा स्तः॥ ५ चय् प्रत्याहारः॥ ६ ख फ छ ठ था इत्येते ॥ ७ पौष्करसादेराचार्यस्य ( मते इति शेषः ) ॥ ८ अच्छो अचच्छा अचशा अशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥ इति सिद्धान्तकौमुद्याम् ॥

ङमुण्नित्यम् ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याच ङमुट् । प्रत्यङ्ङात्मा, सुगण्णीशः, सन्नच्युतः ॥ समः सुटि ।८।३।५। समो रुः सुटि ॥ अत्रानुनासिकः पूर्वस्य तु वा ।८।३।२। अत्र रुप्रकरणे पूर्वस्यानुनासिको वा ॥ अनुनासिकात्परोऽनुस्वारः ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ खरवसानयोर्विसर्जनीयः ८।३।१५ । खरि अवसाने च पदान्तस्य रेफस्य विसर्गः ( संपुंकानां सो वक्तव्यः ) सँस्स्कर्त्ता, संस्स्कर्त्ता ॥ पुमः खय्यम्परे ।८।३।६। [2] [3] खयि पुमो रुः । पुँस्कोकिलः, पुंस्कोकिलः ॥ नश्छव्यप्रशान् । ८ ।३।७। अम्परे छवि नान्तस्य पदस्य रुः ॥ विसर्जनीयस्य सः ।८।३।३४। खरि। चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति । पदान्तस्येति किम् । हन्ति ॥ नॄन्पे ।८।३।१०। नॄनित्यस्य रुर्वा पे ॥ कुप्वोः ≍क≍पौ च ।८।३।३७। कवर्गे पवर्गे च विसर्गस्य ≍क≍पौ स्तः ; चाद्विसर्गः । नॄँ≍ पाहि, नॄं≍ पाहि, नॄँः पाहि, नॄंः पाहि, नॄन्पाहि ॥ तस्य परमाम्रेडितम् । ८।१। २ । द्विरुक्तस्य परमाम्रेडितं स्यात् ॥ कानाम्रेडिते ।८।३।१२। कान्नकारस्य रुः स्यादाम्रेडिते । काँस्कान् कांस्कान् ॥ छे च । ६ । १।७३। ह्रस्वस्य छे तुगागमः । शिवच्छाया ॥ पदान्ताद्वा ६ । १ । ७६ । दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ॥ इति हल्संधिप्रकरणम् ॥

---

१ ङम् प्रत्याहारः॥ २ अम् अम् प्रत्याहारः परो यस्य तस्मिन् ... यय्प्रत्याहारे॥ ३ छव् प्रत्याहारः ॥ ४ द्वितीयमुच्चारणम् ॥ ५ ' आम्रेडितं द्विस्त्रिरुक्तं ' इत्यमरः॥ ६ कान्शब्दस्थितनकारस्य ॥ ७ ह्रस्वस्य पिति कृति तुगित्यस्मात्सूत्राद्ध्रस्वस्य तुक् चेत्यनुवर्त्याह ह्रस्वस्येति तुगागम इति च ॥

## अथ विसर्गसंधिप्रकरणम् ।

विसर्जनीयस्य सः । ८ । ३ । ३४ । खरि । विष्णुस्त्राता ॥ वा शरि । ८ । ३ । ३६ । शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ॥ ससजुषोरुः । ८ । २ । ६६ । पदान्तस्य सस्य सजुषश्च रुः स्यात् ॥ अतो रोरप्लुतादप्लुते । ६ । १ । ११३ । अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ हशि च । ६ । १ । ११४ । तथा । शिवो वन्द्यः ॥ भोभगोअघोअपूर्वस्य योऽशि । ८ । ३ । १७ । एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ॥ हलि सर्वेषाम् । ८ । ३ । २२ । भो भगो अघो अपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः, भगो नमस्ते, अघो याहि ॥ रोऽसुपि ।८।२।६९। अह्नो रेफादेशो न तु सुपि । अहरहः, अहर्गणः ॥ रो रि ।८।३।१४। रेफस्य रेफे परे लोपः ॥ ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुना रमते, हरी रम्यः, शंभू राजते । अणः किम् । तृढः, वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ॥ विप्रतिषेधे परं कार्यम् । १।४।२। तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः, स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असशिवः । हलि किम् । एषोऽत्र ॥ सोऽचि लोपे चेत्पादपूरणम् ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि

---

१ सजुष्शब्दस्य ॥ २ अप्लुतादतः परस्य रोरुः स्याद्धशि ॥ ३ भोभगोअघोअपूर्वस्य ॥ ४ यकारस्य ॥ ५ अग्रे वर्तमानयोरित्यर्थः ॥

पादँश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढिप्रभृतिम्, सैष दाशरथी रामः इति विसर्गसन्धिप्रकरणम् ॥

## अथ अजन्तपुँल्लिङ्गप्रकरणम् ।

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।१।२।४५। धातुं प्रत्ययं प्र. यान्तं च वर्जयित्वार्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् ॥ कृत्तद्धितसमासाश्च ।१।२।४६। कृत्तद्धितान्तौ समासाश्च तथा स्युः ॥ स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ।४।१।२। सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्यां भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसिं भ्यां भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी । ङ्याप्प्रातिपदिकात् । ४ ।१।१। प्रत्ययः ।३।१।१। परश्च ।३।१।२। इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ सुपः १।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ द्व्येकयोर्द्विवचनैकवचने ।१।४।२२। द्वित्वैकत्वयोरेते स्तः ॥ बहुषु बहुवचनम् ।१।४।२१। बहुत्वविवक्षायां बहुवचनं स्यात् ॥ विरामोऽवसानम् ।१।४।११०। वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥ सरूपाणामेकशेष एकविभक्तौ । १ । २ । ६४ । एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥ प्रथमयोः

---

१ अर्थवदित्युक्तेर्धनंवनमित्यादौ प्रतिवर्णं संज्ञाभावात्प्रत्ययाभावः । अधातुरित्युक्तेः अहन्नित्यत्र नलोपाभावः॥ २ प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणात् ॥ ३ प्रातिपदिकसंज्ञकाः ॥ ४ प्रथमाया विभक्तेरेकवचनद्विवचनबहुवचनद्योतकाः प्रत्यया इत्यर्थः । एवं 'द्वितीया' 'तृतीया' इत्यादावपि बोध्यम् ॥ ५ द्वित्वे एकत्वे च वक्तुमिष्टे इत्यर्थः ॥ ६ वृद्धो यूनेत्यत एवेत्यपकृष्याह सरूपाण्येवेति । तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः ॥

पूर्वसवर्णः ।६।१।१०२। अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥ नादिचि ।६।१।१०४। आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ॥ बहुषु बहुवचनम् १।४।२१। चुटू । १।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः ॥ विभक्तिश्च ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ न विभक्तौ तुस्माः ।१।३।४। विभक्तिस्थास्तवर्गसमा नेतः । इति सस्य नेत्त्वम् । रामः, रामौ, रामाः ॥ एकवचनं संबुद्धिः । २।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥ यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् ।१।४।१३। यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्नङ्गं स्यात् ॥ एङ्ह्रस्वात्संबुद्धेः ६ । १ । ६९ । एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । हे राम, हे रामौ, हे रामाः ॥ अमि पूर्वः । ६।१।१०७। अकोऽम्यचि पूर्वरूपमेकादेशः । रामम्, रामौ ॥ लशक्वतद्धिते ।१।३।८। तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥ तस्माच्छसो नः पुंसि ।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सस्य नः स्यात्पुंसि ॥ अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२। अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे । इति प्राप्ते ॥ पदान्तस्य ।८।४।३७। नस्य णो न । रामान् ॥ टाङसिङसामिनात्स्याः । ७।१।१२। अदन्ताट्टादीनामिनादयः स्युः ।

---

१ अवर्णात् ॥ २ इचि इच्प्रत्याहारान्तर्गतवर्णे ॥ ३ बहुत्वविवक्षायाम् ॥ ४ चवर्गटवर्गौ ॥ ५ सकारमकाराः ॥ ६ नेतः इत्संज्ञका न भवन्ति ॥ ७ तदादिग्रहणं 'भवामि भविष्यामि' इत्यादौ शबादिविकरणविशिष्टस्याङ्गसंज्ञार्थम् ॥ ८ तस्मिन्प्रत्यये परतः ॥ ९ अङ्गसंज्ञकम् ॥ १० द्वितीयैकवचनस्य प्रत्ययो योऽम् तत्संबन्धिनीत्यर्थः ॥ ११ लकारः शकारः कवर्गश्च ॥ १२ शस्प्रत्ययावयवस्य सकारस्तस्य नकारः ॥ १३ अच् प्रत्याहारः ॥ १४ 'रषाभ्यां नो णः समानपदे' इति सर्वसूत्रमनुवर्तते ॥

णत्वम्। रामेण॥ सुपि च ।७।३।१०२। यञादौ सुपि अतोऽङ्गस्य दीर्घः। रामाभ्याम्॥ अतो भिस ऐस ।७।१।९। अनेकाल्शित्सर्वस्य। रामैः॥ ङेर्यः ।७।१।१३। अतोऽङ्गात्परस्य ङेर्यादेशः॥ स्थानिवदादेशोऽनल्विधौ ।१।१।५६। आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ। इति स्थानिवत्त्वात्सुपि चेति दीर्घः। रामाय, रामाभ्याम्॥ बहुवचने झल्येत् ।७।३।१०३। झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः। रामेभ्यः। सुपि किम्। पचध्वम्॥ वाऽवसाने ।८।४।५६। अवसाने झलां चरो वा। रामात्, रामाद्, रामाभ्यां, रामेभ्यः। रामस्य॥ ओसि च ।७।३।१०४। अतोऽङ्गस्यैकारः। रामयोः॥ ह्रस्वनद्यापो नुट् ।७।१।५४ ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः॥ नामि ।६।४।३। अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामयोः। एत्वे कृते॥ आदेशप्रत्यययोः ।८।३।५९। इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्धन्यादेशः। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥ सर्वादीनि सर्वनामानि ।१।१।२७। सर्व विश्व उभ

---

१ सूत्रे ङेरिति चतुर्थ्येकवचनं न सप्तम्याः। इदं व्याख्यानात्। ङेरामित्यस्मिन्सूत्रे तु सप्तम्या एव। इदं 'ङियाम्' इत्यादिनिर्देशात् उपलभ्यते॥ २ स्थानिभूतो यः अल् एकवर्णः तदाश्रयविधौ ( तत्र च अलि परतः विधिः अल्विधिः। अलः स्थाने विधिः अल्विधिः। अलः परस्य विधिः अल्विधिः। अला विधिः अल्विधिरित्य-विग्रहैरनेके प्रकारा ज्ञातव्याः॥ ३ रामायेत्यादौ 'सुपि च' इति सूत्रेण दीर्घे कर्तव्ये सन्निपातपरिभाषाया न प्रवृत्तिः 'कष्टाय क्रमणे' इत्यादिनिर्देशेन परिभाषाया अनित्यत्वज्ञापनात्॥ ४ सुपि परे॥ ५ इण्कवर्गाभ्यां परिभूतस्य॥ ६ सर्व आदिर्येषां तानी-त्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः। 'अदः सर्वेषाम्' इति लिङ्गात्॥ ७ सर्वनामसं-ज्ञकानि स्युः॥

उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावर-दक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ जसः शी । ७ । १ । १७ । अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥ सर्वनाम्नः स्मै । ७ । १ । १४ । अतः सर्वनाम्नो ङे स्मै । सर्वस्मै ॥ ङसिङ्योः स्मात्स्मिनौ । ७ । १ । १५ । अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥ आमि सर्वनाम्नः सुट् । ७ । १ । ५२ । अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ । तस्येह पाठोऽकजर्थः[1] । डतरडतमौ प्रत्ययौ[2] । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न । यथासंख्यमनुदेशः समानामिति ज्ञापकात् ॥ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । १ । १ । ३४ । एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था[3] । व्यवस्थायां किम् । दक्षिणा गाथकाः कुशला इत्यर्थः ॥ स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ । ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा सा जसि वा । स्वे स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥ अन्तरं बहिर्योगोपसंव्यानयो । १ । १ । ३६ । बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा-

---

१ 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति सूत्रविहितः अकच् ॥ २ 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' 'बहूनां जातिपरिप्रश्ने डतमच्' इत्युक्तौ डतरडतमौ ३ अवधेर्नियमोऽवधिनियमः । स्वाभिधेयापेक्षश्चासाववधिनियमश्चेति समासः ॥

जासि वा । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ पूर्वादिभ्यो नवभ्यो वा । ७ । १ । १६ एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् पूर्वात्, पूर्वस्मिन् पूर्वे एवं परादीनाम् । शेषं सर्ववत् ॥ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । १ । १ । ३३ । एते जसि उक्तसंज्ञा वा स्युः । प्रथमे प्रथमाः । तयः प्रत्ययः द्वितये द्वितयाः । शेषं रामवत् । नेमे नेमाः । शेषं सर्ववत् । ( तीयस्य ङित्सु वा ) द्वितीयस्मै द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ॥ जराया जरसन्यतरस्याम् । ७ । २ । १०१ । अजादौ विभक्तौ । (पदाङ्गाधिकारे तस्य तदन्तस्य च ) निर्दिश्यमानस्यादेशा भवन्ति । एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस् । निर्जरसौ निर्जरस इत्यादि ॥ पक्षे हलादौ च रामवत् । विश्वपाः ॥ दीर्घाज्जसि च । ६ । १ । १०५ । विश्वपौ, विश्वपाः । विश्वपाम्, विश्वपौ ॥ सुडनपुंसकस्य । १ । १ । ४३ । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ स्वादिष्वसर्वनामस्थाने । १ । ४ । १७ । कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥ यचि भम् । १ । ४ । १८ । यादिष्वजादिषु कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥ आ कडारादेका संज्ञा । १ । ४ । १ । इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या पराऽनवकाशा च ॥ आतो धातोः । ६ । ४ । १४० । आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः, विश्वपा, विश्वपाभ्यामित्यादि ॥ एवं शंखध्मादयः । धातोः किम् ।

---

१ 'संख्याया अवयवे तयप्' इति सूत्रोक्तः । ततस्तदन्ता ग्राह्याः ॥ २ 'द्वेस्तीयः' इति विहितः ॥ ३ जराशब्दस्य जरसादेशो ना स्यात् ॥ ४ अत्र षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वं निर्दिश्यमानत्वं ग्राह्यम् ॥ ५ दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः ॥ ६ अत्र सुट् प्रत्याहारः ॥ ७ यकारादिषु ॥

हाहान् । हरिः, हरी ॥ जसि च । ७ । ३ । १०९ । ह्रस्वान्तस्याङ्गस्य गुणः । हरयः ॥ ह्रस्वस्य गुणः । ७ । ३ । १०८ । संबुद्धौ । हे हरे । हरिम्, हरी, हरीन् ॥ शेषो घ्यसखि । १ । ४ । ७ । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् । आङो नाऽस्त्रियाम् । ७ । ३ । १२० । घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा । हरिणा, हरिभ्याम् हरिभिः ॥ घेर्ङिति । ७ । ३ । १११ । घिसंज्ञस्य ङिति सुपि गुणः । हरये ॥ ङसिङसोश्च । ६ । १ । ११० । एङो ङसिङसोरति पूर्वरूपमेकादेशः । हरेः हर्योः हरीणाम् ॥ अच्च घेः । ७ । ३ । ११९ । इदुद्भ्यामुत्तरस्य ङेरौत् । घेरत् । हरौ हरिषु । एवं कव्यादयः ॥ अनङ् सौ । ७।१।९३। सख्युरङ्गस्यानङादेशोऽसंबुद्धौ सौ ॥ अलोऽन्त्यात्पूर्व उपधा । १ । १ । ६५ । अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः ॥ सर्वनामस्थाने चासंबुद्धौ । ६ । ४ । ८ । नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने ॥ अपृक्त एकाल् प्रत्ययः ।१।२।४१। एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥ नलोपः प्रातिपदिकान्तस्य ।८।२।७। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ॥ सख्युरसंबुद्धौ ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ अचो ञ्णिति ।७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ सखायः । हे सखे । सखायम् सखायौ

---

१ 'एङ्ह्रस्वात्' इति सूत्रेण संबुद्धेर्लोपः ॥ २ घिसंज्ञकस्य अकारादेशो भवति । ३ अल् प्रत्याहारः ॥ ४ 'सु ति सि' एतत्प्रत्ययसंबन्ध्येकवर्णरूपम् । सुतिसीति किम् । अभैत्सीत् । अत्र सूत्रे सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमिति परिभाषया तिपा सह चरितस्य सिप एव ग्रहणं न सिचः ॥ ५ 'गोतो णित्' इत्यस्मात्सूत्रात् णि-दित्यनुवर्तते ॥

सखीन् । सख्या सख्ये ॥ ख्यत्यात्परस्य ।६।१।११२। खितिशब्दा खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः औत् ।७।३।११८। इतः परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥ पति समास एव ।१।४।८। घिसंज्ञा । पत्ये । पत्युः २ पत्यौ । शेषं हरिवत् समासे तु भूपतये । कतिशब्दो बहुवचनान्तः ॥ बहुगणवतुडति ।१।१।२३। डति च ।१।१।२५। डत्यन्ता संख्या षट्संज्ञा स्यात् ॥ ष्णान्ता षट् ।१।१।२४। षड्भ्यो लुक् ।७।१।२२। जश्शसोः ॥ प्रत्ययस्य लुक्श्लुलुपः ।१।१।६१ लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ प्रत्ययलक्षणम् । १ । १ । ६२ । प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् इति जसि चेति गुणे प्राप्ते ॥ न लुमताङ्गस्य ।१।१।६३। लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २ कतिभिः कतिभ्यः २ कतीनाम् कतिषु । युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः त्रीन् त्रिभिः त्रिभ्यः २ ॥ त्रेस्त्रयः ।७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् त्रिषु । गौणत्वेऽपि प्रियत्रयाणाम् त्यदादीनामः ।७।२।१०२। एषामकारो विभक्तौ । द्विपर्यन्तानामेवेष्टिः द्वौ द्वौ द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । पाति लोकमिति पपीः सूर्यः । दीर्घाज्जसि च । ६ । १ । १०५ । दीर्घाज्जसि इचि च परे न पूर्वसवर्णः पप्यौ पप्यः । हे पपीः पपीम् पपीन् पप्या पपीभ्याम् पपीभिः पप्ये पपीभ्यः पप्यः पप्योः । दीर्घत्वान्न नुट् । पप्याम् । ङौ तु सवर्णदीर्घः । पपी पप्योः

---

१ उकारः स्यात् ॥ २ इदुद्भ्यामुत्तरस्य ॥ ३ 'शेषो घ्यसखि' इति सूत्रात् घीति पदमनुवर्तते । पतिशब्दः समासे एव घिसंज्ञकः ॥ ४ एते संख्यासंज्ञाः स्युः । ५ 'ष्णान्ता षट्' इत्यतः षडिति पदमनुवर्तते ॥ ६ षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् । ७ लोपशब्देन लुप्ते सत्यपि ॥ ८ 'लुक् श्लु लुप्' एते लुमन्तः ॥ ९ पुंल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गेषु समं रूपमेषाम् ॥ १० अकारोऽन्तादेशः स्यात् ॥

पीषु। एवं वातप्रम्यादयः। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥ यूस्त्र्याख्यौ नदी ।१।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। प्रथमलिङ्गग्रहणं च पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ अम्बार्थनद्योर्ह्रस्वः । ७ ।३।१०७। सम्बुद्धौ । हे बहुश्रेयसि ॥ आण्नद्याः । ७ । ३ । ११२ । नद्यन्तात्परेषां ङितामाडागमः ॥ आटश्च । ६ । १ । ९० । आटोऽचि परे वृद्धिरेकादेशः ॥ बहुश्रेयस्यै बहुश्रेयस्याः बहुश्रेयसीनाम् । ङेराम्नद्याम्नीभ्यः । ७ । ३ । ११६ । नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेराम् । बहुश्रेयस्याम् । शेषं पपीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः शेषं बहुश्रेयसीवत् । प्रधीः ॥ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ । श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोः भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥ एरनेकाचोऽसंयोगपूर्वस्य ।६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये । प्रध्यौ प्रध्यः प्रध्यम् प्रध्यौ प्रध्यः प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् । नीः नियौ नियः । अमि शसि च परत्वादियङ् । नियम् । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ यवक्रियौ ॥ गतिश्च ।१।४।६०। प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । गतिकारकेतरपूर्वपदस्य यण् नेष्यते । शुद्धधियौ ॥ न भूसुधियोः । ६ । ४।८५। एतयोरचि सुपि यण्न । सुधियौ सुधियः इत्यादि । सुखमिच्छतीति सुखीः । सुतीः सुख्यौ सुत्यौ सुख्युः सुत्युः । शेषं प्रधीवत् । शंभुर्हरिवत् । एः

१ ई च ऊ च यू इति विग्रहे प्रत्ययग्रहणे तदन्ता ग्राह्या इति परिभाषया तदन्तग्रहणम् ॥ २ गौणत्वेऽपि ॥ ३ 'संबुद्धौ च' इत्यस्मात्सूत्रात् संबुद्धावित्यनुवर्तते ॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ ॥ ४ आम् आदेशः स्यात् ॥ ५ उपसर्गसंज्ञा गतिसंज्ञकाश्चेत्यर्थः ॥ ६ सुतमिच्छतीति सुतीः इति विग्रहः ॥

भान्वादयः ॥ तृज्वत्क्रोष्टुः । ७ । १ । ९५ । असंबुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्य क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः । ऋतो ङिसर्वनामस्थानयोः । ७।३।११०। ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च इति प्राप्ते ॥ ऋदुशनस्पुरुदंसोऽनेहसां च । ७। १। ९४। ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ ॥ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् । ६ । ४ । ११ । अबादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने । क्रोष्टा क्रोष्टारौ क्रोष्टारः क्रोष्टून् ॥ विभाषा तृतीयादिष्वचि । ७ । १ । ९७ । अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा क्रोष्ट्रे ॥ ऋत उत् । ६ । १ । १११ । ऋतो ङसिङसोरिति उदेकादेशो रपरः ॥ रात्सस्य । ८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः क्रोष्टोः (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) क्रोष्टूनाम् क्रोष्टरि । पक्षे हलादौ च शंभुवत् । हूहूः हूह्वौ हूह्वः हूहूम् इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै अतिचम्वाः अतिचमूनाम् । खलपूः ॥ ओः सुपि । ६ । ४ । ८३ । धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ खलप्वः । एवं सुल्वादयः । स्वभूः स्वभुवौ स्वभुवः । वर्षाभूः ॥ वर्षाभ्वश्च । ६ । ४ । ८४ । अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः । ( दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः ) दृन्भ्वौ । एवं करभूः । धाता हे धातः धातारौ धातारः । ( ऋवर्णान्नस्य णत्वं वाच्यम् ) धातॄणाम् । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् ।

---

१ 'सर्वनामस्थाने चासंबुद्धौ' इति सूत्रमनुवर्तते ॥ २ स्थाने इति शेषः ॥ [illegible] इति सर्वं सूत्रमनुवर्तते ॥ ४ उकारः ॥ ५ उणादिनिष्पन्नानां तृन्तृ-[illegible]तानां संज्ञाशब्दानां भवति चेत् तर्हि नप्त्रादीनामेवेति । तेन पितृभ्रातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात् ॥

तेनेह न । पिता पितरौ पितरः पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना नरौ ॥ नृ च । ६ । ४ । ६ । अस्य नामि वा दीर्घः । नृणाम् नृणाम् ॥ गोतो णित् । ७ । १ । ९० । ओकाराद्विहितं सर्वनामस्थानं णिद्वत् । गौः गावौ गावः ॥ औतोऽम्शसोः । ६ । १ । ९३ । ओकारादम्शसोरचि आकार एकादेशः । गाम् गावौ गाः । गवा गवे गोः इत्यादि ॥ रायो हलि । ७ । २ । ८५ । अस्याकारादेशो हलि विभक्तौ । राः रायौ रायः । राभ्यामित्यादि । ग्लौः ग्लावौ ग्लावः । ग्लौभ्यामित्यादि ॥ इत्यजन्ताः पुंल्लिङ्गाः ॥

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

रमा ॥ औङ आपः । ७ । १ । १८ । आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे रमाः ॥ संबुद्धौ च । ७ । ३ । १०६ । आप एकारः स्यात्संबुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोपः । हे रमे हे रमे हे रमाः । रमाम् रमे रमाः ॥ आङि चापः । ७ । ३ । १०५ । आङि ओसि चाप एकारः । रमया रमाभ्याम् रमाभिः ॥ याडापः । ७ । ३ । ११३ । आपो ङितो याट् । वृद्धिः । रमायै रमाभ्यः रमाभ्यः । रमायाः रमयोः रमाणाम् । रमायाम् रमासु । एवं दुर्गाम्बिकादयः ॥ सर्वनाम्नः स्याड्ढ्रस्वश्च । ७ । ३ । ११४ । आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै सर्वस्याः सर्वासाम् सर्वस्याम् । शेषं रमावत् । एवं विश्वादय आबन्ताः ॥ विभाषा दिक्समासे बहुव्रीहौ । १ । १ । २८ । सर्वनामता वा । उत्तरपूर्वस्यै उत्तरपूर्वायै । (तीयस्य वा संज्ञा)

---

१ तेन 'अचो ञ्णिति' इत्यनेन सूत्रेणाजन्ताङ्गस्य वृद्धिर्भवति ॥ २ आ इति पदच्छेदः ॥ ३ रैशब्दस्य ॥ ४ आबन्तस्याङ्गस्य ॥ ५ 'ङे ङसि ङस् ङि' एषामित्यर्थः ॥ ६ विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् इति वार्तिकात् ॥

द्वितीयस्यै द्वितीयायै । एवं तृतीया । अम्बार्थेति ह्रस्वः । हे अम्ब हे अक्क हे अल्ल । जरा जरसौ जरे इत्यादि । पक्षे रमावत् । गोपा विश्वपावत् मतीः मत्या ॥ ङिति ह्रस्वश्च । १ । ४ । ६ । इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ ङिति । मत्यै मतये मत्याः २ मतेः ॥ इदुद्भ्याम् । ७ । ३ । ११७ नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् । मत्याम् मतौ । शेषं हरिवत् । बुद्ध्यादयः ॥ त्रिचतुरोः स्त्रियां तिसृ चतसृ । ७ । २ । ९९ । स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ[1] ॥ अचि र ऋतः । ७ । २ । १०० । तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः । आमि नुट् ॥ न तिसृचतसृ[2] । ६ । ४ । ४ एतयोर्नामि दीर्घो न । तिसृणाम् तिसृषु । द्वे द्वे द्वाभ्याम् द्वाभ्याम् द्वाभ्याम् द्वयोः द्वयोः । गौरी गौर्यौ गौर्यः । हे गौरि गौर्यै इत्यादि । एवं नद्यादयः लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री हे स्त्रि ॥ स्त्रियाः । ६ । ४ । ७९ । अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ स्त्रियः ॥ वाम्शसोः । ६ । ४ । ८० । अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् स्त्रीम् स्त्रियः स्त्रीः स्त्रिया स्त्रियै स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् स्त्रीषु । श्रीः श्रियौ श्रियः ॥ नेयङुवङ्स्थानावस्त्री । १ । ४ । ४ । इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो स्त्रीभिन्नौ । हे श्रीः श्रियै श्रिये श्रियाः श्रियः ॥ वामि । १ । ४ । ५ । इयङुवङ्स्थानौ स्त्र्याख्यौ यू[3] आमि वा नदीसंज्ञौ स्तो स्त्रीभिन्नौ । श्रीणाम् श्रियाम् श्रियि श्रियाम् । धेनुर्मतिवत् ॥ स्त्रियां च । ७ । १ । ९६ । स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥ ऋन्नेभ्यो ङीप् । ४ । १ । ५ । ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् ।

---

[1] 'अष्टन आ विभक्तौ' इत्यतो विभक्ताविति पदमनुवर्तते ॥ २ तिसृ चतसृ इति लुप्तषष्ठीकं पदम् ॥ ३ ईकारान्तोकारान्तौ ॥

क्रोष्ट्री गौरीवत् । भूः श्रीवत् । स्वयंभूः पुंवत् ॥ न षट्स्वस्रादिभ्यः । ४ । १ । १० । ङीप्टापौ न स्तः । स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥ याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ स्वसा स्वसारौ । माता पितृवत् । शसि मातृः । द्यौर्गौवत् । राः पुंवत् । नौर्ग्लौवत् ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

## अथाजन्तनपुंसकलिङ्गप्रकरणम् ।

अतोऽम् । ७ । १ । २४ । अतोऽङ्गात् क्लीबात्स्वमोरम् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः । हे ज्ञान ॥ नपुंसकाच्च । ७ । १ । १९ । क्लीबादौङः शी स्यात् । भसंज्ञायाम् ॥ यस्येति च । ६ । ४ । १४८ । ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः इत्यलोपे प्राप्ते । ( औङः श्यां प्रतिषेधो वाच्यः ) ज्ञाने ॥ जश्शसोः शिः । ७ । १ । २० । क्लीबादनयोः शिः स्यात् ॥ शि सर्वनामस्थानम् । १ । १ । ४२ । शि इत्येतदुक्तसंज्ञं स्यात् ॥ नपुंसकस्य झलचः । ७ । १ । ७२ । झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥ मिदचोऽन्त्यात्परः । १ । १ । ४७ । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् शेषं पुंवत् । एवं धनवनफलादयः ॥ अद्ड्डतरादिभ्यः पञ्चभ्यः । ७ । १ । २५ । एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥ टेः । ६ । ४ । १४३ । डिति भस्य टेर्लोपः कतरत् कतरद् कतरे कतराणि । हे कतरत् । शेषं पुंवत् । एवं कतमत् इतरत् अन्यत् अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव ( एकतरात्प्रतिषेधो वक्तव्यः ) ॥ एकतरम् ॥ ह्रस्वो नपुंसके प्रातिपदिकस्य । १ । २ । ४७

---

१ षट्संज्ञकेभ्यः स्वस्रादिशब्देभ्यश्च ॥ २ जश्शसोः ॥ ३ मित्संज्ञक आदेशः स्यादित्यर्थः ॥ ४ डिति परे ॥

अजन्तस्येत्येव । श्रीपम् ज्ञानवत् ॥ स्वमोर्नपुंसकात् । ७ । १ । २३ । लुक् स्यात् । वारि ॥ इकोऽचि विभक्तौ ।७।१।७३। इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी वारीणि । न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारि हे वारे । घेर्ङितीति गुणे प्राप्ते ( वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः वारिणः वारिणोः । नुमचिरेति नुट् । वारीणाम् वारिणि । हलादौ हरिवत् ॥ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७ । १।७५। एषामनङ् स्यात् टादावचि । अल्लोपोऽनः । ६ ।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना दध्ने दध्नः दध्नः दध्नोः ॥ विभाषा ङिश्योः ।६। ४ ।१३६ । अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । सुधि सुधिनी सुधीनि । हे सुधे, हे सुधि सुधिनेत्यादि । मधु मधुनी मधूनि । हे मधो, हे मधु । सुलु सुलुनी सुलूनि सुलुनेत्यादि । धातृ धातृणी धातॄणि धातॄणाम् हे धातः । एवं ज्ञात्रादयः ॥ एच इग्घ्रस्वादेशे । १ । १ । ४८ । आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु प्रद्युनी प्रद्यूनि प्रद्युनेत्यादि । प्रि प्रिणी प्रीणि प्रिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् प्रीणाम् । सुनु सुनुनी सुनूनि सुनुनेत्यादि ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

## अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

हो ढः । ८ । २ । ३१ । हस्य ढः स्याज्झलि पदान्ते च । लिट् लिड् लिहौ लिहः । लिड्भ्याम् लिट्सु लिट्त्सु ॥ दादेर्धातोर्घः । ८ । २ ।

---

१ क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् ॥ २ 'षड्भ्यो लुक्' इत्यस्मात्सूत्रात्पत्यनुवर्तते ॥ ३ नुमागमः स्यात् ॥ ४ अनङादेशः स्यात् स चोदात्तः ॥ ५ 'ए ऐ ओ औ' तेषां ह्रस्वे कर्तव्ये 'इ उ ऋ लृ' एत एव क्रमात्स्युः ॥

। ३२ । उपदेशे दादेर्धातोर्हस्य घः झलि पदान्ते च ॥ एकाचो बशो भष् झषन्तस्य स्ध्वोः। ८ । २ । ३७ । धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च । धुक् धुग् दुहौ दुहः धुग्भ्याम् धुक्षु ॥ वा द्रुहमुहष्णुहष्णिहाम् । ८ । २ । ३३ । एषां हस्य वा घो झलि पदान्ते च । ध्रुक् ध्रुग् ध्रुट् ध्रुड् द्रुहौ द्रुहः ध्रुग्भ्याम् ध्रुड्भ्याम् ध्रुक्षु ध्रुट्सु ध्रुट्त्सु एवं मुह ॥ धात्वादेः षः सः । ६ । १ । ६४ । स्नुट् स्नुड् स्नुक् स्नुग् एवं स्निह् ॥ इग्यणः संप्रसारणम् । १ । १ । ४५ । यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ॥ वाह ऊठ् । ६ । ४ । १३२ । भस्य वाहः संप्रसारणमूठ् ॥ संप्रसारणाच्च । ६ । १ । १०८ । संप्रसारणादचि पूर्वरूपमेकादेशः । वृद्धिः । विश्वौहः इत्यादि ॥ चतुरनडुहोरामुदात्तः । ७ । १ । ९८ । अनयोराम्स्यात्सर्वनामस्थाने परे स चोदात्तः। सावनडुहः । ७ । १ । ८२ । अस्य नुम्स्यात्सौ परे । अनड्वान् ॥ अम्संबुद्धौ । ७ । १ । ९९ । हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः अनडुहः अनडुहा ॥ वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२ । सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् विद्वान् । पदान्तेति किम् । स्रस्तम् ध्वस्तम् ॥ सहेः साडः सः । ८ । ३ । ५६ । साड्रूपस्य सहेः सस्य मूर्धन्यादेशः । तुराषाट् तुराषाड् तुरासाहौ तुरासाहः तुराषाड्भ्यामित्यादि ॥ दिव औत् । ७ । १ । ८४ । दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः सुदिवौ ॥ दिव उत् । ६ । १ । १३१ । दिवोन्तादेश उकारः स्यात्पदान्ते । सुद्युभ्यामित्यादि । चत्वारः चतुरः चतुर्भिः चतुर्भ्यः ॥ षट्चतुर्भ्यश्च । ७ । १ । ५५ । एभ्य आमो नुडागमः ।

---

१ तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च ॥ २ चतुरनडुहोः स्यात्संबुद्धौ ॥ ३ षट् संज्ञकेभ्यश्चतुरश्च परस्य ॥

रषाभ्यां नो णः समानपदे । ८ । ४ । १ । अचो रहाभ्यां द्वे । ८ । ४ । ४६ । अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्णाम् ॥ रोः सुपि ॥ ८ । ३ । १६ । रोरेव विसर्गः सुपि । सत्वम्, तस्य द्वित्वे प्राप्ते ॥ शरोऽचि । ८ । ४ । ४९ । अचि परे शरो न द्वे स्तः । चतुर्षु ॥ मो नो धातोः । ८ । २ । ६४ । धातोर्मस्य नः पदान्ते । प्रशान् ॥ किमः कः । ७ । २ । १०३ । किमः कः स्याद्विभक्तौ । कः कौ के इत्यादि ॥ शेषं सर्ववत् ॥ इदमो मः ।७।२।१०८। त्यदाद्यत्वापवादः ॥ इदोऽय् पुंसि ।७।२।१११। इदम इदोय् स्यात्सौ पुंसि । अयम् । त्यदाद्यत्वे ॥ अतो गुणे । ६ । १ । ९७ । अपदान्तादतो गुणे पररूपमेकादेशः ॥ दश्च । ७ । २ । १०९ । इदमो दस्य मः स्याद्विभक्तौ । इमौ इमे । त्यदादेः संबोधनं नास्तीत्युत्सर्गः ॥ अनाप्यकः ।७।२।११२। अककारस्य इदम इदोऽन् स्यादापि विभक्तौ । आबिति प्रत्याहारः । अनेन ॥ हलि लोपः । ७ । २ ।११३। अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ आद्यन्तवदेकस्मिन् । १।१।२१। एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ॥ नेदमदसोरकोः । ७ । १ । ११ । अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै एभ्यः अस्मात् अस्य अनयोः २ एषां अस्मिन् एषु ॥ द्वितीयाटौस्स्वेनः । २ । ४ । ३४ । इदमेतदोरेनादेशः

---

१ रेफषकाराभ्यां परीभूतस्य नकारस्य णकारः स्यादेकपदे ॥ २ सप्तम्या बहुवचने ॥ ३ शर् प्रत्याहारः ॥ ४ 'अष्टन आ विभक्तौ' इति सूत्राद् विभक्तावित्यनुवर्तते । विभक्तौ परतः किम्शब्दस्य क आदेश इत्यर्थः ॥ ५ 'तदोः सः सौ' इत्यस्मात् सावितीति पदमनुवर्तते । इदमो मः स्यात्सौ परे ॥ ६ इदः स्थाने ॥ ७ उत्सर्गः प्रायोवादः । स इति भाष्यवचनात् ॥ ८ आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः ॥

स्यादन्वादेशे। किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलम् एनयोः प्रभूतं स्वं धनमिति। एनम् एनौ एनान् एनेन एनयोः एनयोः। राजा॥ न ङिसंबुद्ध्योः।८।२।८। नस्य लोपो न ङौ संबुद्धौ च। हे राजन् ( ङावुत्तरपदे प्रतिषेधो वक्तव्यः ) ब्रह्मनिष्ठः। राजानौ राजानः राज्ञः॥ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति।८।२।२। सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। यज्वा यज्वानौ यज्वानः॥ न संयोगाद्वमन्तात्।६।४।१३७। वमन्तसंयोगादनोऽकारस्य लोपो न। यज्वनः यज्वना यज्वभ्याम्। ब्रह्मणः ब्रह्मणा॥ इन्हन्पूषार्यम्णां शौ। ६। ४। १२। एषां शावेवोपधाया दीर्घो नान्यत्र। इति निषेधे प्राप्ते॥ सौ च। ६। ४। १३। इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ। वृत्रहा हे वृत्रहन्। एकाजुत्तरपदे णः। ८। ४। १२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः। वृत्रहणौ॥ हो हन्तेर्ञ्णिन्नेषु। ७। ३। ५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम्। वृत्रघ्नः इत्यादि। एवं शार्ङ्गिन् यशस्विन् अर्यमन् पूषन्॥ मघवा बहुलम्। ६। ४। १२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्॥ उगिदचां सर्वनामस्थानेऽधातोः। ७। १। ७०। अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम्स्यात्सर्वनामस्थाने परे। मघवान् मघवन्तौ मघवन्तः हे मघवन् मघवद्भ्याम्। तृत्वाभावे मघवा। सुटि राजवत्॥ श्वयुवमघोना-

---

१ वकारान्तमकारान्तसंयोगात्परिभूतस्य॥ २ 'सर्वनामस्थाने चासंबुद्धौ' इति सूत्रेणैव दीर्घे सिद्धे नियमार्थमिदम्॥

मतद्धिते । ६ । ४ । १६३ । अन्नन्तानां भानामेषामतद्धिते संप्रसारणम् । मघोनः मघवभ्याम् । एवं श्वन् युवन् ॥ न संप्रसारणे संप्रसारणम् । ६ । १ । ३७ । संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः यूना युवभ्यामित्यादि । अर्वा । हे अर्वन् ॥ अर्वणस्त्रसावनञः । ६ । ४ । १२७ । नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ अर्वन्तः अर्वद्भ्यामित्यादि ॥ पथिमथ्यृभुक्षामात् । ७ । १ । ८५ । एषामाकारोऽन्तादेशः स्यात्सौ परे ॥ इतोऽत्सर्वनामस्थाने । ७ । १ । ८६ । पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे ॥ थो न्थः । ७ । १ । ८७ । पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः पन्थानौ पन्थानः ॥ भस्य टेर्लोपः । ७ । १ । ८८ । भस्य पथ्यादेष्टेर्लोपः । पथः पथा पथिभ्याम् । एवं मथिन् ऋभुक्षिन् ॥ ष्णान्ता षट् । १ । १ । २४ । षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं बहुवचनान्तः । पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः । नुट् ॥ नोपधायाः । ६ । ४ । ७ । नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् पञ्चसु ॥ अष्टन आ विभक्तौ । ७ । २ । ८४ । हलादौ वा स्यात् ॥ अष्टाभ्य औश् । ७ । १ । २१ । कृताकारादष्टनो जश्शसोरौश् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ अष्टौ अष्टाभिः अष्टाभ्यः अष्टाभ्यः अष्टानाम् अष्टासु । आत्वाभावे अष्ट पञ्चवत् ॥ ऋत्विग्दधृक्स्रग्दिगु-

---

१ भसंज्ञकानाम् ॥ २ आदिशब्देन पथिमथ्यृभुक्षग्रहणमित्यर्थः ॥ ३ भसंज्ञकस्य ॥ ४ गौणत्वे लुम्नुटौ । प्रियपञ्चा प्रियपञ्चानौ इत्यादि ॥ ५ ' षट्चतुर्भ्यश्च ' इत्यनेन सूत्रेण ॥ ६ वैकल्पिकमिदमष्टन् शब्दस्य आत्वम् । ' अष्टनो दीर्घात् ' इति सूत्रे दीर्घग्रहणं चात्र ज्ञापकम् ॥

ष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९। एभ्यः क्विन् । अञ्चेः सुप्युपपदे युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ ॥ कृदतिङ् ।३।१।९३। अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥ वेरपृक्तस्य ।६।१।६७। अपृक्तस्य वस्य लोपः ॥ क्विन्प्रत्ययस्य कुः ।८।२।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते । तस्यासिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विग्भ्याम् ॥ युजेरसमासे ।७।१।७१। युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् युञ्जौ युञ्जः युग्भ्याम् ॥ चोः कुः । ८ । २ । ३० । चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक् सुयुजौ सुयुग्भ्याम् । खन् खञ्जौ खन्भ्याम् ॥ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ८ । २ । ३६ । झलि पदान्ते च । जश्त्वचर्त्वे । राट् राड् राजौ राजः राड्भ्याम् । एवं विभ्राट् देवेट् विश्वसृट् ( परौ व्रजेः षः पदान्ते ) परावुपपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि । परिव्राट् परिव्राजौ ॥ विश्वस्य वसुराटोः । ६ । ३ । १२८ । विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट् विश्वाराड् विश्वराजौ विश्वाराड्भ्याम् ॥ स्कोः संयोगाद्योरन्ते च । ८ । २ । २९ । पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलां जश् झशीति सस्य जः । भृज्जौ भृड्भ्याम् । त्यदाद्यत्वं

१ 'धातोः' इति सूत्रमत्रानुवर्तते ॥ २ 'लोपो व्योः—' इत्यस्मात्सूत्रात् लोप इत्यनुवर्तते ॥ ३ 'उगिदचां सर्वनामस्थाने धातोः' इत्यतः सर्वनामस्थान् इति 'इदितो नुम् धातोः' इत्यस्मात् नुमिति चानुवर्तते ॥ ४ 'झलो झलि' इत्यतो झलीति 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इति चात्रानुवर्तते ॥ ५ भ्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यात् ॥ ६ 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इत्यदः दीर्घ इत्यनुवर्तते ॥ ७ सकारककारयोः ॥

पररूपत्वम् ॥ तदोः सः सावनन्त्ययोः । ७ । २ । १०६ । त्यदादीनां तकारदकारयोरन्त्ययोः सः स्यात्सौ । स्यः त्यौ त्ये । सः तौ तेः । यः यौ ये । एषः एतौ एते ॥ ङेप्रथमयोरम् । ७ । १ । २८ । युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ॥ त्वाहौ सौ । ७ । २ । ९४ । अनयोर्मपर्यन्तस्य त्वाहावादेशौस्तः ॥ शेषे लोपः । ७ । २ । ९२ । एतयोष्टिलोपः । त्वम् अहम् ॥ युवावौ द्विवचने । ७ । २ । ९२ । द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ प्रथमायाश्च द्विवचने भाषायाम् ।७।२।८८। औङ्येतयोरात्वं लोके । युवाम् आवाम् ॥ यूयवयौ जसि । ७ । २ । ९३ । अनयोर्मपर्यन्तस्य । यूयम् वयम् ॥ त्वमावेकवचने । ७ । २ । ९७ । एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ द्वितीयायां च । ७ । २ । ८७ । अनयोरात्स्यात् । त्वाम् माम् ॥ शसो नः । ७ । १ । २८ । आभ्यां शसो नः स्यादमोऽपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान् अस्मान् ॥ योऽचि । ७ । २ । ८९ । अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया मया ॥ युष्मदस्मदोरनादेशे । ७ । २ । ८६ अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् आवाभ्याम् युष्माभिः अस्माभिः ॥ तुभ्यमह्यौ ङयि । ७ । २ । ९५ । अनयोर्मपर्यन्तस्य । टिलोपः । तुभ्यम् मह्यम् ॥ भ्यसोऽभ्यम् । ७ । १ । ३० । आभ्यां परस्य । युष्मभ्यम् अस्मभ्यम् ॥ एकवचनस्य च । ७ । १ । ३२ । आभ्यां ङसेरत् । त्वत् मत् ॥ पञ्च-

---

१ ङे इति लुप्तषष्ठ्यन्तं पदम् । प्रथमाशब्दश्च प्रथमाद्वितीयासमुदायपरः ॥ २ ‘ मपर्यन्तस्य ’ इत्यधिकारोऽस्ति । तेन सर्वे युष्मदस्मदोरादेशा मपर्यन्तस्यांशस्यैव भवन्ति ॥ ३ शेष इति षष्ठ्यर्थे सप्तमी ॥ ४ नेत्यविभक्तिकं पदम् ॥ ५ तुभ्यमह्यौ स्तो ङयि ॥ ६ भ्यसोऽभ्यमादेशः ॥ ७ अकारादेशः ॥

